अथ

# * नृसिंहसहस्रनाम *

प्रारभ्यते ।

इति

* नृसिंहसहस्त्रनाम *

समाप्तम् ।

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासा-
त्मज-क्षेमराजेन स्वकीये "श्रीवेङ्कटे-
श्वर" ( स्टीम् ) यंत्रालये संमुद्र्य
प्रकाशितम् । संवत् १९९२,
शके १८५७.

पुस्तक मिलनेका पता-

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस,
बम्बई.

गङ्गाविष्णु श्रीकृष्णदास,
'लक्ष्मीवेङ्कटेश्वर' स्टीम्-प्रेस,
कल्याण-बम्बई.

श्रीनृसिंहपुराणेनृसिंहप्रादुर्भावे सर्वार्थ साधनं दिव्यं श्रीमद्दिव्यलक्ष्मीनृसिंह सहस्रनामस्तोत्रं संपूर्णम् ॥ श्रीमद्दिव्य लक्ष्मीनृसिंहार्पणमस्तु ॥ शके १८१९ हे मलंबीनामसंवत्सरे मार्गशीर्षकृष्णे १० रविवासरे ॥

इति नृसिंहसहस्रनाम संपूर्णम् ॥

चारस्त्वयमेवसदामख: ॥ इदमेवत्रयो
वेदा:सच्छास्त्राण्यागमानिच ॥ २२० ॥
नृसिंहमंत्रादन्यच्चवैदिकेतुन विद्यते ॥
यदिहास्तितदन्यत्र यन्नेहास्तिनतत्क्व
चित् ॥ २१ ॥ कथितंतेनृसिंहस्यचरितं
पापनाशनम् ॥ सर्वमंत्रमयंतापत्रयो
पशमनंपरम् ॥ २२ ॥ सर्वार्थसाधनंदि
व्यंकिंभूय:श्रोतुमिच्छसि ॥२२३॥ इति

नृ. हस्तोत्रमिदंतव ॥ १६ ॥ त्वंहिनित्यं सह.
३८ शुचिर्भूत्वातमाराधयशाश्वतम् ॥ सर्व
भूताश्रयंदेवंनृसिंहंभक्तवत्सलम् ॥१७॥
पूजयित्वास्तवंजप्त्वाहुत्वा निश्चलमान
सः ॥ प्राप्यसे महतींसिद्धिंसर्वान्कामा
न्वरोत्तमान् ॥ १८ ॥ अयमेवपरोधर्म
स्त्वदमेवपरंतपः ॥ इदमेवपरंज्ञानामि ३८
दमेवमहद्व्रतम् ॥ १९ ॥ अयमेवसदा

नि: ॥ कतुंजयायसप्राहजातूकर्ण्याय
संयमी ॥ १३ ॥ विष्णुवृद्धायसोप्याह
सोपिबौधायनायच ॥ क्रमात्सविष्णवे
प्राहसप्राहोद्दामकुक्षये ॥ १४ ॥ सिंहते
जाश्वतस्माच्चश्रीप्रियाय ददौचसः ॥
उपदिष्टोस्मितेनाहमिदंनामसहस्रकम्
॥ १५ ॥ तत्प्रसादादमृत्युमेंयस्मात्क
स्माद्भयंनहि ॥ मयाचकथितंनारसिं

नृ. देवताऋषयःसिद्धायक्षविद्याधरोरगाः ॥ सह.
३७ गंधर्वाश्चमनुष्याश्चइहामुत्रफलैषिणः ॥
॥ २१० ॥ यस्यस्तोत्रस्यपाठाद्धिविशुद्ध
मनसोभवन् ॥ सनत्कुमारःसंप्राप्तोभार
द्वाजोमहामतिः ॥ ११ ॥ तस्मादांगिर
सःप्राप्तस्तस्मात्प्राप्तोमहाक्रतुः ॥ जैगी
षव्यायसप्राहसोब्रवीच्च्यवनायच १२॥ ३७
तस्माउवाचशांडिल्यो गर्गायप्राहवैमु

राज्यपरिभ्रष्टोयुगानामेकाविंशतिः ॥६॥
नृसिंहेनहतेदैत्ये स्वर्गलोकमवापसः ॥
दिक्पालाश्चसुसंप्राप्ताः स्वस्वस्थानमनु
त्तमम् ॥ ७ ॥ धर्मेमतिःसमस्तानांप्र
जानामभवत्तदा ॥ एवंनामसहस्त्रंमेब्र
ह्मणानिर्मितंपुरा ॥ ८ ॥ पुत्रानध्यापया
माससनकादीन्महामतिः ॥ ऊचुस्ते
चततःसर्वलोकानांहितकाम्यया ॥ ९ ॥

लक्ष्मीमालिंग्यलीलया ॥ प्रह्लादस्या सह.
भिषेकंतुब्रह्मणेचोपादिष्टवान् ॥ ३ ॥
श्रीशैलस्यप्रपादेतु लोकानांच हिताय
वै ॥ स्वरूपंस्थापयामासप्रकृतिस्थो
ऽभवत्तदा ॥ ४ ॥ ब्रह्मापिदैत्यराजानंप्र
ह्लादमभ्यषेचयत् ॥ दैवतैःसहसुप्रीतो
ह्यात्मलोकंययौस्वयम् ॥ ५ ॥ हिरण्य
कशिपोर्भीत्याप्रपलायशचीपतिः॥ स्वर्गं

तेपापैर्भुक्तिंमुक्तिंचाविन्दति ॥ नारीसुभ
गतामेतिसौभाग्यंचस्वरूपताम् २०० ॥
भर्तुःप्रियत्वंलभतेनवैधव्यंचविन्दति ॥
नसपत्नीच जन्मांते सम्यग्ज्ञानीद्वि
जोभवेत् ॥ २०१ ॥ भूमिप्रदाक्षिणान्म
त्यौंयत्फलंलभतेचिरात् ॥ तत्फलंल
भतेनारीसिंहमूर्तिंप्रदक्षिणात् ॥ २ ॥
मार्कंडेयउवाच ॥ इत्युक्त्वादेवदेवेशो

॥ ९६ ॥ असत्यस्तुतथायज्ञनिंदको
लोकनिंदकः ॥ स्मृत्वासकृन्नृसिंहंतुमु
च्यतेसर्वकिल्बिषैः ॥ ९७ ॥ बहुनात्र
किमुक्तेनस्मृत्वामां शुद्धमानसः ॥
यत्रयत्रचरेन्मर्त्योनृसिंहस्तत्र रक्षति ॥
॥ ९८ ॥ गच्छंस्तिष्ठन्स्वपन्भुंजञ्जाग्रद
पिहसन्नपि ॥ नृसिंहेतिनृसिंहेतिनृसिं
हेतिसदास्मरन् ॥ ९९ ॥ पुमान्नलिप्य

ज्वराः ॥ एतत्सर्वंसमाप्नोतिनृसिंहस्य
प्रसादतः ॥ ९३ ॥ जलसंतरणेचैवपर्वं
तारण्यमेवच ॥ वनेपिविचरन्मर्त्योदु
र्गमेविषमेपथि ॥ ९४ ॥ बिलप्रवेशने
चापिनारसिंहंनाविस्मरेत् ॥ ब्रह्मघ्नश्च
पशुघ्नश्चभ्रूणहागुरुतल्पगः ॥ ९५ ॥ मु
च्यतेसर्वपापेभ्योकृतघ्नस्त्रीविघातकः ॥
वेदानांदूषकश्चापिमातापितृविनिंदकः ॥

स्थलतांयांतिवह्नयोयांतिशीतताम् ॥ वि
षाण्यमृततांयांति नृसिंहस्मरणात्सुराः
॥ ९० ॥ राज्यकामोलभेद्राज्यंधनका
मोलभेद्धनम् ॥ विद्याकामोलभेद्विद्यां
बद्धोमुच्येतबंधनात् ॥ ९१ ॥ व्याल
व्याघ्रभयंनास्तिचोरसर्पादिकात्तथा ॥
अनुकूलाभवेद्भार्यालोकैश्चप्रतिपूज्यते ॥
॥ ९२ ॥ सुपुत्रधनधान्यंचभवंतिविगत

ज्ञकाः ॥८५॥ निशाचरग्रहाःसर्वेप्रणश्यं
तिचदूरतः ॥ कुक्षिरोगंचहृद्रोगंशूलाप
स्मारमेवच ॥ ८६ ॥ ऐकाहिकंद्व्याहि
कंचचातुर्थिकमथज्वरम् ॥ आधयो
व्याधयःसर्वेरोगारोगाधिदेवताः ॥८७॥
शीघ्रंनश्यंति ते सर्वे नृसिंहस्मरणात्सु
राः ॥ ८८ ॥ राजानोदासतांयांतिश
त्रवोयांतिमित्रताम् ॥ ८९ ॥ जलानि

 तिस्मरत्वंलभतेब्रह्मज्ञानंसनातनम् ॥ 
 ॥ ८२ ॥ सर्वपापविनिर्मुक्तस्तद्विष्णोः
परमंपदम् ॥ मन्नामकवचंबद्ध्वाविच
रेद्विगतज्वरः ॥ ८३ ॥ भूतवेतालकूष्मां
डपिशाचब्रह्मराक्षसाः ॥ शाकिनीडाकि
नीज्येष्ठानीलीबालग्रहादिकाः ॥ ८४ ॥
दुष्टग्रहाश्चनश्यंतियक्षराक्षसपन्नगाः ॥ 
ये च संध्याग्रहाः सर्वे चांडालग्रहसं

नंतत्करिष्यामिसांप्रतम् ॥ एवंनाम
सहस्रंमेत्रिसंध्यंयः पठेच्छुचिः ॥ ७९ ॥
शृणोतिवाश्रावयतिपूजांतेभक्तिसंयुतः॥
सर्वान्कामानवाप्नोति जीवेच्च शरदां
शतम् ॥ १८० ॥ योनामभिर्नृसिंहाद्यै
रर्चयेत्क्रमशोमम ॥ सर्वतीर्थेषुयत्पु
ण्यं सर्वतीर्थेषुयत्फलम् ॥ ८१ ॥ सर्वपू
जासुयत्प्रोक्तंतत्सर्वंलभतेभृशम् ॥ जा

सर्वाःश्रुत्वातांब्रह्मणोगिरम् ॥ स्तोत्रेणा
पिचसंहृष्टःसौम्यभावमधारयत् ॥७६॥
अब्रवीन्नारसिंहस्तु वीक्ष्य सर्वान्सुरोत्त
मान् ॥ संत्रस्तान्भयसंविग्नाञ्छरणंस
मुपागतान् ॥ ७७ ॥ श्रीनृसिंह
उवाच ॥ ॥ भोभोदेववराः सर्वेपिता
महपुरोगमाः ॥ शृणुध्वंममवाक्यंचभवं
तुविगतज्वराः ॥ ७८ ॥ यद्धितंभवतांनू

गणान्सप्तमातृगौरींसरस्वतीम् ॥ ल
क्ष्मींनदीश्च तीर्थानि रतिंभूतगणानपि
॥ ७३ ॥ प्रसीदत्वंमहासिंहउग्रभाव
मिमंत्यज ॥ प्रकृतिस्थोभवत्वंहिशां
तिभावंचधारय ॥ ७४ ॥ इत्युक्त्वा
दंडवद्भूमौपपातसपितामहः ॥ प्रसीद
त्वंप्रसीदत्वंप्रसीदेतिपुनःपुनः ॥ ७५ ॥
॥ मार्कंडेय उवाच ॥ दृष्ट्वातु देवताः

रूप ॥६९॥ उद्धृत्यगर्वितंदैत्यंनिहत्या
जौसुरद्विषम् ॥ देवकार्यंमहत्कृत्वागर्ज
सेस्वात्मतेजसा ॥१७०॥ अतिरुद्रमि
दंरूपंदुःसहंदुरतिक्रमम् ॥ दृष्ट्वातुशंकि
ताःसर्वादेवतास्त्वामुपागताः ॥ ७१ ॥
एतान्पश्य महेशानं ब्रह्माणंमांशचीप
तिम् ॥ दिक्पालान्द्वादशादित्यान्रु
द्रानुरगराक्षसान् ॥ ७२ ॥ सर्वानृषि

ज ॥ ६६ ॥ अग्निनेत्रनमस्तेस्तुनमस्ते
ह्यमराप्रिय ॥ महानेत्रनमस्तेस्तुनम
स्तेभक्तवत्सल ॥ ६७ ॥ धर्मने
त्रनमस्तेस्तु नमस्ते करुणाकर ॥ पु
ण्यनेत्रनमस्तेस्तु नमस्तेभीष्टदायक ॥
॥ ६८ ॥ नमोनमस्ते जयसिंहरू
प नमोनमस्ते नरसिंहरूप ॥ नमोन
मस्ते रणसिंहरूप नमोनमस्तेनरसिंह

नृ. य च ॥ वृषध्वजायवृष्ण्यायवृषाय सह.
३० वृषभायच ॥ ६३ ॥ उग्रश्रवायशां
तायनमःश्रुतिधरायच ॥ नमस्तेदेवदे
वेशनमस्तेमधुसूदन ॥ ६४ ॥ नमस्तेपुं
डरीकाक्षनमस्तेदुरितक्षय ॥ नमस्तेक
रुणासिंधोनमस्तेसामितिंजय ॥ ६५ ॥
नमस्तेनरसिंहायनमस्तेगरुडध्वज ॥ ३०
यज्ञनेत्र नमस्तेस्तु कासध्वजजयध्व

नमः ॥ ५९ ॥ प्रियंवदायश्चाव्याय
स्रुक्स्रुवाय श्रितायच ॥ गृहेशायमहे
शायब्रह्मेशायनमोनमः ॥ १६० ॥ श्रीध
रायसुतीर्थायहयग्रीवायतेनमः ॥ उग्रा
यउग्रवेगायउग्रकर्मरतायच ॥६१॥ उग्र
नेत्राय व्यग्राय समग्रगुणशालिने ॥
बालग्रहविनाशाय पिशाचग्रहघातिने
॥ ६२ ॥ दुष्टग्रहानिहंत्रेच निग्रहानुग्रहा

एकात्मनेनमस्तुभ्यं नमस्तेद्वादशा
त्मने ॥ ५६ ॥ चतुर्विंशतिरूपायपंच
विंशतिमूर्त्तये ॥ षड्विंशकात्मनेनित्यं
सप्तविंशतिकात्मने ॥५७॥ धर्मार्थका
ममोक्षायाविरक्तायनमोनमः ॥ भावशु
द्धायसिद्धायसाध्यायशरभायच ॥५८॥
प्रबोधायसुबोधायनमोबुद्धिप्रियायच ।
स्निग्धायच विदग्धाय मुग्धायमुनये

ङ्चायईशिताय इनायच ॥ व्योमा
त्मने चव्योम्नेच नमस्तेव्योमकेशिने
॥ ५३ ॥ व्योमाधारायचव्योमवक्काया
सुरघातिने ॥ नमस्तेव्योमदंष्टायव्यो
मवासायतेनमः ॥ ५४ ॥ सुकुमारायरा
मायशुभाचारायवैनमः ॥ विश्वायविश्व
रूपायनमोविश्वात्मकायच ॥५५॥ ज्ञा
नात्मकायज्ञानायविश्वेशायपरात्मने ॥

डजायस्वेदजायोंद्भिजायच ॥ ४९ ॥
जनार्दनायरामायजाह्नवीजनकायच ॥
जराजन्माधिदूराय प्रद्युम्नायप्रमोदिने
॥ १५० ॥ जिह्वारौद्रायरुद्रायवीरभद्रा
यतेनमः ॥ चिद्रूपायसमुद्रायकद्रुद्राय
प्रचेतसे ॥ ५१॥ इंद्रियायेंद्रियज्ञायनमो
स्त्विंद्रानुजायच ॥ अतींद्रियायसाराय
इंदिरापतयेनमः ॥ ५२ ॥ ईशानायचई

यतेनमः ॥ सामस्वनायसौम्यायभ
क्तिगम्यायवैनमः ॥ ४६ ॥ कूष्मांड
गणनाथायसर्वश्रेयस्करायच ॥ भी
ष्मायभीपदायैव भीमविक्रमणायच
॥४७॥ मृगग्रीवायजीवायजितायाजि
तकारिणे ॥ जटिनेजामदग्न्यायनम
स्तेजातवेदसे ॥ ४८ ॥ जपाकुसुमवर्णा
यजप्यायजपितायच ॥ जरायजायां

॥ ४२ ॥ ऊर्ध्वसिंहायसिंहायनमस्तेचो
र्ध्वबाहवे ॥ परप्रध्वंसकायैवशंखचक्र
धरायच ॥ ४३ ॥ गदापद्मधरायैवपंच
बाणधरायच्च ॥ कामेश्वरायकामाय
कामपालायकामिने ॥ ४४ ॥ नमः
कामविहारायकामरूपधरायच ॥ सो
मसूर्याग्निनेत्राय सोमपायनमोनमः
॥ ४५ ॥ नमःसोमायवामायवामदेवा

नमः ॥ दुर्निरीक्ष्यायनिष्ठायदुर्दर्शाय
द्रुमायच ॥ ३९ ॥ दुर्भेद्यायदुराशाय
दुर्लभायनमोनमः ॥ दृप्तायदृप्तवक्त्रा
यअदृप्तनयनायच ॥ १४० ॥ उन्मत्ता
यप्रमत्तायनमोदैत्यारयेनमः ॥ रस
ज्ञायरसेशायअरक्तरसनायच ॥ ४१ ॥
पथ्यायपरितोषायरथ्यायरसिकायच ॥
ऊर्ध्वकेशोर्ध्वरूपायनमस्तेचोर्ध्वरेतसे ॥

नृ. शिलावासायतेनमः ॥३५॥ योगिहृत्प सह.
२६ द्मवासायमहाहासायतेनमः ॥ गुहावा
सायगुह्यायगुप्तायगुरवेनमः ॥३६॥ न
मोमूलाधिवासायनीलवस्त्रधरायच ॥
पीतवस्त्रायशस्त्राय रक्तवस्त्रधरायच ॥
॥३७॥ रक्तमालाविभूषायरक्तगंधानुले
पिने ॥ धुरंधरायधूर्तायदुर्धरायधरायच २६
॥ ३८ ॥ दुर्मदायदुरंतायदुर्धरायनमो

ध्वंसकारिणे ॥ बुद्धायबुद्धरूपायतीक्ष्ण
रूपायकल्किने ॥ ३२ ॥ आत्रेयाया
ग्निनेत्रायकापिलायाद्विजायच ॥ क्षेत्रा
यपशुपालायपशुवक्रायतेनमः ॥ ३३ ॥
गृहस्थाययवनस्थाययतयेब्रह्मचारिणे ॥
स्वर्गापवर्गदात्रे च तद्भोक्रेचमुमुक्षवे ॥
॥ ३४ ॥ शालग्रामानिवासायक्षीरा
ब्धिशयनायच ॥ श्रीशैलाद्रिनिवासाय

॥ २८ ॥ नागेश्वरायनागायनमिता
यनरायच ॥ नागांतकरथायैवनरना
रायणायच ॥ २९ ॥ नमोमत्स्यस्व
रूपायकच्छपायनमोनमः ॥ नमोयज्ञ
वराहायनरसिंहायतेनमः ॥ १३० ॥
विक्रमाक्रांतलोकाय वामनाय महौज
से ॥ नमोभार्गवरामायरावणांतकराय
च ॥ ३१ ॥ नमस्तेबलरामायकंसप्र

भवायविभवायच ॥ सुशाखायविशाखा
यसुमुखायमुखायच ॥ २५ ॥ सुनखाय
सुदंष्ट्राय सुरथायसुधायच ॥ सांख्याय
सुरमुख्यायप्रख्यातायप्रभायच ॥ २६॥
नमःखड्वांगहस्तायखेटमुद्गरपाणये ॥ ख
गेंद्रायमृगेंद्रायनागेंद्रायदृढायच २७ ॥
नागकेयूरहारायनागेंद्रायाघमार्दिने ॥
नदीवासाय नग्नाय नानारूपधरायच

णे ॥ २१ ॥ समवायुस्वरूपायस
तच्छंदोमयायच ॥ स्वच्छायस्वच्छरू
पायस्वच्छंदायचतेनमः ॥ २२ ॥ श्रीव
त्सायसुवेषायश्रुतयेश्रुतिमूर्त्तये ॥ शु
चिश्रवाय शूराय सुप्रभायेसुधन्विने ॥
॥ २३ ॥ शुभ्रायसुरनाथायसुप्रभायशु
भायच ॥ सुदर्शनायसूक्ष्मायनिरुक्ता २४
यनमोनमः ॥ २४ ॥ सुप्रभायस्वभावाय

अनंतासिंहासिंहाय अनंतगतयेनमः ॥
॥ १८ ॥ नमोविचित्रासिंहायबहुसिंह
स्वरूपिणे ॥ अभयंकरासिंहायनरासिं
हायतेनमः ॥ १९ ॥ नमोऽस्तुसिंहरा
जायनारसिंहायतेनमः ॥ सप्ताब्धिमे
खलायैवसत्यसत्यस्वरूपिणे ॥ १२० ॥
सप्तलोकांतरस्थाय सप्तस्वरमयायच ॥
सप्तार्चिरूपदंष्ट्राय सप्ताश्वरथरूपि

नृ. श्वेतासिंहायपातिसिंहायतेनमः ॥ नी सह.
२३ लसिंहायनीलाय रक्तसिंहाय तेनमः ॥
॥ १५ ॥ नमोहारिद्रासिंहायधूम्रासिंहाय
तेनमः ॥ मूलासिंहायमूलायबृहत्सि
हायतेनमः ॥ १६ ॥ पातालस्थिति
सिंहायनमः पर्वतवासिने ॥ नमोजल
स्थसिंहायअंतरिक्षस्थितायच ॥ १७ ॥
कालाग्निरुद्रासिंहायचंडासिंहायतेनमः ॥ २२

कशिपोर्हंत्रेहिरण्यनयनायच ॥ ११ ॥
हिरण्यरेतसेतुभ्यंहिरण्यवदनायच ॥
नमोहिरण्यशृंगाय निःशृंगायचशृंगिणे
॥ १२ ॥ भैरवायसुकेशायभीषणायांत्र
मालिने ॥ चंडायरुंडमालायनमो दंड
धरायच ॥ १३ ॥ अखंडतत्त्वरूपायक
मंडलुधरायच ॥ नमस्तेखंडसिंहाय
सत्यसिंहायतेनमः ॥ १४ ॥ नमस्ते

नृ. र्मविधायिने ॥ ७ ॥ सुशर्मणेमन्मथाय सह.
२२ नमोवर्मायवर्मिणे ॥ करिचर्मवसानाय
करालवदनायच ॥ ८ ॥ कवयेपद्मगर्भाय
भूतगर्भघृणानिधे ॥ ब्रह्मगर्भायगर्भाय
बृहद्गर्भायधूर्जटे ॥ ९ ॥ नमस्तेविश्वगर्भा
यश्रीगर्भायजितारये ॥ नमोहिरण्यग
र्भायहिरण्यकवचायच ॥ १० ॥ हिरण्य २२
वर्णदेहायहिरण्याक्षविनाशिने ॥ हिरण्य

यधर्माय धारणाभिरतायच ॥ नमोधात्रे
चसंधात्रेविधात्रेचधरायच ॥ १०४ ॥ दा
मोदरायदान्तायदानवान्तकरायच ॥ न
मःसंसारवैद्यायभेषजायनमोनमः ५ ॥
शीरध्वजायशीताय वातायाप्रमिताय
च ॥ सारस्वतायसंसारनाशनायाक्ष
मालिने ॥ ६ ॥ असिधर्मधरायैवषट्कर्म
निरतायच ॥ विकर्मायसुकर्मायपरक

नृ. पस्त्वंत्वांविनानास्तिमेगतिः ॥१०० ॥ सह.

२१ नमस्तेमंत्ररूपायअस्त्ररूपायतेनमः ॥
बहुरूपायरूपाय पंचरूपधरायच १०१
भद्ररूपायरूढाययोगरूपाय योगिने ॥
समरूपाययोगाययोगपीठस्थिताय च
॥ १०२ ॥ योगगम्यायसौम्याय ध्यान
गम्यायध्यायिने ॥ ध्येयगम्यायधाम्ने २१
चधामाधिपतये नमः ॥१०३॥ धराधरा

यकः ॥ लोकसाक्षीलोकपतिर्लोकात्मा
लोकलोचनः ॥ १७ ॥ लोकाधारो बृह
ल्लोको लोकालोकमयो विभुः ॥ लोकक
र्त्ताविश्वकर्त्ताकृतावर्तःकृतागमः ॥ १८ ॥
अनादिस्त्वमनंतस्त्वमभूतो भूतविग्र
हः ॥ स्तुतिस्तुत्यस्तवप्रीतः स्तोतानेता
नियामकः ॥१९॥ त्वंगतिस्त्वंमतिर्मह्यं
पितामातागुरुः सखा ॥ सुहृदश्चात्मरू

नृ. स्वरूपस्त्वंज्योतिर्ज्ञों ज्योतिषांपतिः ॥ हस.
२० स्वाहाकारः स्वधाकारो वषट्कारः कृपा
करः ॥ ९४ ॥ हंतकारोनिराकारोवेगा
कारश्चशंकरः ॥ अकारादिहकरांत ॐ
कारो लोककारकः ॥ ९५ ॥ एकात्मा
त्वमनेकात्माचतुरात्माचतुर्भुजः ॥ च
तुर्मूर्तिश्चतुर्दंष्ट्रश्चतुर्वेदमयोत्तमः ॥९६॥ २०
लोकप्रियो लोकगुरुर्लोकेशो लोकना

वत्सराः ॥ ९० ॥ युगादिर्युगभेदस्त्वंसं
युगो युगसंधयः ॥ नित्यंनैमित्तिकंदैनं
महाप्रलयमेवच ॥ ९१ ॥ करणंकारणंक
र्त्ताभर्त्ताहर्त्तात्वमीश्वर ॥ सत्कर्त्तास
त्कृतिर्गोप्तासच्चिदानंदविग्रहः ॥ ९२ ॥
प्राणस्त्वंप्राणिनांप्रत्यगात्मा त्वं सर्वदे
हिनाम् ॥ सुज्योतिस्त्वंपरंज्योतिरात्म
ज्योतिः सनातनः ॥ ९३ ॥ ज्योतिर्लोक

१९ लिह्यसेग्रसमानः समंताल्लोकान्समग्रा
न्वदनैर्ज्वलद्भिः ॥ तेजोभिरापूर्य जग
त्समग्रंभासस्तवोग्राः प्रतपंतिविष्णो ॥
॥ ८८ ॥ भविष्णुस्त्वं सहिष्णुस्त्वंभ्रा
जिष्णुर्जिष्णुरेव च ॥ पृथिवीमंतरिक्षं
त्वंपर्वतारण्यमेव च ॥ ८९ ॥ कलाका
ष्ठाविलिप्तस्त्वं मुहूर्त्तप्रहरादिकम् ॥
अहोरात्रं त्रिसंध्या च पक्षमासर्तु १९

लोकत्रयंप्रव्यथितं महात्मन् ॥ ८५ ॥
अमीहित्वासुरसंघा विशंति केचिद्भी
ताःप्रांजलयोगृणंति ॥ स्वस्तीत्युक्त्वा
मुनयःसिद्धसंघाःस्तुवंति त्वांस्तुतिभिः
पुष्कलाभिः ॥ ८६ ॥ रुद्रादित्यावं
सर्वायेच साध्या विश्वेदेवामरुतश्चोष्म
पाश्च ॥ गंधर्वयक्षासुरासिद्धसंघावीक्ष्यं
तित्वांविस्मिताश्चैव सर्वे ॥ ८७ ॥ ले

नृ.

१८

सिंहनमोनमोविह्वलनेत्रासिंह ॥ नमो
नमोबृंहितभूतसिंह नमोनमो निर्मल
च्चित्रसिंह ॥ ८२ ॥ नमोनमोनिर्जित
कालसिंह नमोनमः कल्पितकल्पासिंह॥
॥ ८३ ॥ नमोनमःकामदकामासिंहन
मोनमस्तेभुवनैकासिंह ॥ ८४ ॥ द्या
वापृथिव्योरिदमंतरं हि व्याप्तंत्वयैकेन
दिशश्चसर्वाः ॥ दृष्ट्वाद्भुतंरूपमुग्रंतवेदं

सह.

१८

षांद्रुद्रमीशानंतदग्रेसर्वतःशिवम् ॥७९॥
नमोऽस्तुनारायणनारासिंह नमोऽस्तुना
रायणवीरासिंह ॥ नमोऽस्तुनारायणक्रू
रासिंह नमोऽस्तु नारायणदिव्यसिंह
॥ ८० ॥ नमोऽस्तुनारायणव्याघ्रसिंहन
मोऽस्तुनारायणपुच्छसिंह ॥ नमोऽस्तु
नारायणपूर्णसिंह नमोऽस्तुनारायणरौ
द्रसिंह ॥ ८१॥ नमोनमो भीषणभद्र

नृ. रंसर्वतोऽक्षिशिरोमुखम् ॥ सर्वैश्वरं सदा सह-
१७ तुष्टंसमर्थं समरप्रियम् ॥ ७६ ॥ बहुयो
जनविस्तीर्णंबहुयोजनमायतम् ॥ बहु
योजनहस्तांघ्रिं बहुयोजननासिकम् ॥
॥ ७७ ॥ महारूपं महावक्रंमहादंष्ट्रं
महाभुजम् ॥ महानादंमहारौद्रं महा
कायंमहाबलम् ॥ ७८ ॥ आनाभेर्ब्र १७
ह्मणोरूपमागलाद्वैष्णवंतथा ॥ आशी

लावण्यायलवित्रायनमस्ते भासकाय
च ॥ लक्षणज्ञायलक्षायलक्षणायनमो
नमः ॥ ७३ ॥ लसद्दीसायलिप्ता
यविष्णवेप्रभविष्णवे ॥ वृष्णिमूलाय
कृष्णाय श्रीमहाविष्णवेनमः ॥ ७४ ॥
पश्यामित्वांमहासिंहंहारिणं वनमालि
नम् ॥ किरीटिनंकुंडलिनंसर्वांगं सर्व
तोमुखम् ॥ ७५ ॥ सर्वतःपाणिपादो

नृ. यच ॥ ब्रह्मणेब्रह्मरूपायपद्मनेत्रनमोन सह.
१६ मः ॥६९॥ ब्रह्मादयेब्राह्मणायब्रह्मब्रह्मा
त्मनेननमः ॥ सुब्रह्मण्यायदेवायब्रह्मण्या
यात्रिवेदिने ॥ ७० ॥ परब्रह्मस्वरूपा
यपंचब्रह्मात्मनेननमः ॥ नमस्तेब्रह्मशिर
सेतथाश्वशिरसेनमः ॥७१॥ अथर्वशिर
सेनित्यमशनिप्रामितायच ॥ नमस्तेती १६
क्ष्णदंष्ट्रायलोलायललितायच ॥ ७२ ॥

हितायगवांपते ॥६५॥ गंधर्वायगभीरा
यगर्जितायोर्जितायच ॥ पर्जन्यायप्रबु
द्धायप्रधानपुरुषायच ॥६६॥ पद्माभाय
सुनाभायपद्मनाभाय मानिने ॥ पद्मने
त्रायपद्मायपद्मायाःपतयेनमः ॥६७॥ प
द्मोदरायपूतायपद्मकल्पोद्भवायच ॥ न
मोहृत्पद्मवासायभूपद्मोद्धरणाय च ॥
॥६८॥ शब्दब्रह्मस्वरूपायब्रह्मरूपधरा

वे ॥ अमृताय अंनताय अमितायामितौजसे ॥ ६२ ॥ अपमृत्युविनाशायअपस्मारविघातिने ॥ अन्नदायान्नरूपाय आन्नायान्नभुजे नमः ॥६३॥ नाद्यायनिरवद्यायविद्यायाद्भुतकर्मणे ॥ सद्योजाताय संघायवैयतायनमोनमः ॥ ॥ ६४ ॥ अध्वातीताय सत्त्वायवागतीतायवाग्ग्मने ॥ वागीश्वराय गोपायगो

रवायलुंठायनिःशठायहठायच ॥ सत्त्वो
द्रिक्तायरुद्राय ऋग्यजुःसामगायच ॥
॥ ५९ ॥ ऋतुध्वजाय वज्रायमंत्रराजा
यमंत्रिणे ॥ त्रिनेत्रायत्रिवर्गाय त्रिधाम्ने
चत्रिशूलिने ॥ ६० ॥ त्रिकालज्ञानरू
पायत्रिदेहायत्रिधात्मने ॥ नमस्त्रिमूर्ति
विद्यायत्रितत्त्वज्ञानिनेनमः ॥ ६१ ॥
अक्षोभ्यायानिरुद्धाय अप्रमेयायभान

तेजोमयनृसिंहायनमस्ते चित्रभानवे ॥
॥ ५५ ॥ महादंष्ट्रायतुष्टायनमःपुष्टिक
रायच ॥ शिपिविष्टायहृष्टायपुष्टायपर
मेष्ठिने ॥ ५६ ॥ विशिष्टायचाशिष्टायग
रिष्ठायेष्टदायिने ॥ नमोज्येष्ठायश्रेष्ठाय
तुष्टायामिततेजसे ॥५७॥ अष्टांगन्यस्त
रूपायसर्वदुष्टांतकायच ॥ वैकुंठायावि
कुंठायाशितिकंठायतेनमः ॥५८ ॥ कंठी

अनंतानंतरूपायमायिनेजलशायिने ॥
महोदराय मंदायमदद्रायमदायच ॥
॥ ५२ ॥ मधुकैटभहंत्रे चमाधवायमु
रारये ॥ महावीर्याय धैर्याय चित्रवी
र्याय तेनमः ॥ ५३ ॥ चित्रकूर्मायाचि
त्रायनमस्तेचित्रभानवे ॥ मायातीता
यमायायमहावीरायतेनमः ॥ ५४ ॥
महातेजाय बीजायतेजोधाम्नेचबीजिने ।

सर्वज्वराविनाशाय सर्वरोगापहारिणे ॥ 
॥ ४८ ॥ सर्वाभिचारहंत्रेचसर्वैश्वर्यवि
धायिने ॥ पिंगाक्षायैकश्रृंगायद्विश्रृंगा
यमरीचये ॥ ४९ ॥ बहुश्रृंगायलिंगाय
महाश्रृंगाय तेनमः ॥ मांगल्यायमनो
ज्ञायमंतव्यायमहात्मने ॥५०॥ महादे
वायदेवाय मातुलिंगधरायच ॥ महामा 
याप्रसूतायप्रस्तुतायचमायिने ॥ ५१ ॥

भूतग्रहविनाशाय भूतसंयमते नमः ॥
महाभूतायभृगवेसर्वभूतात्मने नमः ॥
॥ ४५ ॥ सर्वारिष्टविनाशायसर्वसंप
त्करायच ॥ सर्वाधारायशर्वायसर्वार्ति
हरये नमः ॥ ४६ ॥ सर्वदुःखप्रशांता
यसर्वसौभाग्यदायिने ॥ सर्वज्ञाया
प्यनंतायसर्वशक्तिधरायच ॥ ४७ ॥
सर्वैश्वर्यप्रदात्रेच सर्वकार्यविधायिने ॥

शिक्षायविपक्षक्षयमूर्तये ॥ ४१ ॥ का
लाध्यक्षाय तीक्ष्णाय मूलाध्यक्षाय ते
नमः ॥ अधोक्षजाय मित्रायसुमित्रवरु
णायच्च ॥ ४२ ॥ शत्रुघ्नायअविघ्नाय
विघ्नकोटिहरायच्च ॥ रक्षोघ्नायतमोघ्नाय
भूतघ्नाय नमोनमः ॥ ४३ ॥ भूतपा
लायभूतायभूतावासाय भूतिने ॥ भूत
वेतालघातायभूताधिपतयेनमः ॥ ४४ ॥

ह्वायमहाजिह्वाय तेनमः ॥ सहस्त्रनाम
धेयाय सहस्त्राक्षधराय च ॥ ३८ ॥ स
हस्त्रबाहवेतुभ्यंसहस्त्रचरणायच ॥ सह
स्त्रार्कप्रकाशायसहस्त्रायुधधारिणे ॥ ३९ ॥
नमःस्थूलायसूक्ष्माय सुसूक्ष्माय नमो
नमः ॥ सुक्षुण्यायसुभिक्षायसुराध्यक्षा
यशौरिणे ॥ ४० ॥ धर्माध्यक्षायधर्मा
यलोकाध्यक्षायवैनमः ॥ प्रजाध्यक्षाय

सू. मोघ्राय तत्त्वाय चतपास्विने ॥ ३४ ॥ सह.
११ तक्षकायतनुत्रायतटिने तरलायच ॥
शतरूपायशांतायशतधाराय तेनमः ॥
॥ ३५ ॥ शतपत्रायताक्ष्यायास्थितयेश
तमूर्तये ॥ शतक्रतुस्वरूपायशाश्वताय
शतात्मने ॥ ३६ ॥ नमः सहस्रशिरसेस
हस्रवदनायच ॥ सहस्राक्षायदेवायदि
शाश्रोत्रायतेनमः ॥३७॥ नमःसहस्राजि ११

यविटंकनयनाय च ॥ विपुलाय विनी
तायविश्वयोनेनमोनमः ॥ ३१ ॥ चि
दंबरायवित्तायविश्रुतायावियोनये ॥ वि
ह्वलायाविकल्पाय कल्पातीतायशिल्पि
ने ॥ ३२ ॥ कल्पनायस्वरूपायफणि
तल्पायवैनमः ॥ तडित्प्रभाय तार्याय
तरुणायतरस्विने ॥ ३३ ॥ तपनायत
रक्षायतापत्रयहरायच ॥ तारकायत

नमः ॥ २७॥ विकीर्णनखदंष्ट्रायन
खदंष्ट्रायुधायच ॥ विष्वक्सेनाय सेना
यविह्वलायबलायच ॥ २८॥ विरूपाक्षा
यवीरायविशेषाक्षाय साक्षिणे ॥ वीत
शोकाय विस्तीर्णवदनाय नमोनमः ॥
॥ २९ ॥ विधानायाविधेयायविजयाय
जयायच ॥ विबुधाय विभावायनमोवि
श्वंभरायच ॥ ३०॥ वीतरागाय विप्रा

राध्यक्षायदक्षायदाक्षिणार्याय शंभवे ॥
॥ २४ ॥ अमोघायगुणौघाय अनघायाघहारिणे ॥ मेघनादायनादायतुभ्यंमेघात्मनेनमः ॥ २५ ॥ मेघवाहनरूपाय
मेघश्यामाय मालिने ॥ व्यालयज्ञोपवीतायव्याघ्रदेहाय वैनमः ॥ २६॥ व्याघ्रपादाय च व्याघ्रकर्मिणे व्यापकाय
च ॥ विकटास्याय वीराय विष्टरश्रवसे

अक्रूरायकृतांतायविक्रमायक्रमायच ॥
कृत्तिने कृत्तिवासाय कृतघ्नायकृतात्मने
॥ २१ ॥ संक्रमायचक्रुद्धायक्रांतलोक
त्रयायच ॥ अरूपायस्वरूपायहरयेपर
मात्मने ॥ २२ ॥ अजयायादिदेवाय
अक्षयाय क्षयायच ॥ अघोराय सुघो
राय घोरघोरतरायच ॥ २३ ॥ नमो
स्त्वघोरवीर्यायललद्घोरायतेनमः ॥ घो

प्रभवेविभवेनमः ॥ १७ ॥ प्रभंजनाय
पांथाय प्रमायाप्रमितायच ॥ प्रकाशा
यप्रतापाय प्रज्वलायोज्ज्वलायच॥१८॥
ज्वालामालास्वरूपाय ज्वलज्जिह्वाय
ज्वालिने ॥ महाज्वालायकालायकाल
मूर्तिधरायच ॥ १९ ॥ कालांतकायक
ल्पायकलनायकृतेनमः ॥ कालचक्राय
शक्रायवषट्चक्राय चक्रिणे ॥ २० ॥

२

यमुंजायमुंजकेशायकेशिने ॥ हरीशा
यचशेषायगुडाकेशायवैनमः ॥ १४ ॥
सुकेशायोर्ध्वकेशाय केशिसंहारकाय
च ॥ जलेशायस्थलेशायपद्मेशायोग्ररू
पिणे ॥ १५ ॥ कुशेशयायकलायकेशवा
यनमोनमः ॥ सूक्तिकर्णायसूक्तायरक्त
जिह्वायरागिणे १६ दीप्तरूपायदीप्तायप्र
दीप्तायप्रलोभिने ॥ प्रच्छिन्नायप्रबोधाय

यगुणायच ॥ १० ॥ निष्प्रपंचायनिर्वा
णपदायनिर्विडाय च ॥ निरालंबायनी
लायनिकलायकलायच ॥ ११ ॥ नि
मेषायनिबंधायनिमेषगमनायच ॥ नि
र्द्वंद्वायनिराशायनिश्चयायायनिराय च ॥
॥ १२ ॥ निर्मलायनिबंधायनिर्मोहाय
निराकृते ॥ नमोनित्यायसत्यायस
त्कर्मनिरताय च ॥ १३ ॥ सत्यध्वजा

द्रश्यायतेनमः ॥ अट्टहासायरोषायज
लवासायतेनमः ॥ ७ ॥ भूतावासाय
भासायश्रीनिवासायखड्गिने ॥ खड्गजि
ह्वायसिंहायखड्गवासायतेनमः ॥ ८ ॥
नमोमूलाधिवासाय धर्म्मवासायधन्वि
ने ॥ धनंजयायधन्यायनमोमृत्युंजया
यच ॥ ९ ॥ शुभंजयायसूत्रायनमःशत्रुं
जयायच ॥ निरंजनायनीरायनिर्गुणा

दवरदायैवप्रत्यक्षवरदायच ॥ ३ ॥ प
रात्परपरेशायपवित्रायपिनाकिने ॥ पा
वनायप्रसन्नायपाशिनेपापहारिणे ॥४॥
पुरुष्टुतायपुण्याय पुरुहूतायतेनमः ॥
तत्पुरुषायतथ्यायपुराणपुरुषायच ॥५॥
पुरोधसेपूर्वजायपुष्कराक्षाय ते नमः ॥
पुष्पहासायहासाय महाहासायशार्ङ्गि
णे ॥ ६ ॥ सिंहायसिंहराजाय जग-

हाख्यंब्रह्मवेदांतगोचरम् ॥ भूयोलालि
तसंसारच्छेदहेतुंजगद्गुरुम् ॥२॥ ब्रह्मो
वाच ॥ ॐह्रींश्रींऐंक्ष्रौं ॐनमोनारसिं
हायवज्रदंष्ट्रायवज्रिणे ॥ वज्रदेहायव
ज्रायनमोवज्रनखायच ॥ १ ॥ वासुदेवा
यवंद्यायवरदायवरात्मने ॥ वरदाभय
हस्तायवरायवररूपिणे ॥ २ ॥ वरेण्या
यवरिष्ठायश्रीवराय नमोनमः ॥ प्रह्ला

ॐ ऊर्ध्वांदिशं सुदर्शं० ॥ ॐ अधस्ता
द्दिशं सुद० ॥ ॐ अंतरिक्षांदिशंसुद० ॥
अथ ध्यानम् ॥ सत्यज्ञानसुखस्वरूपम
मलंक्षीराब्धिमध्येस्थलं योगारूढमति
प्रसन्नवदनं भूषासहस्रोज्ज्वलम् ॥
त्र्यक्षं चक्रपिनाकसाभयवरान्बिभ्राण
मर्कच्छविं छत्रीभूतफणींद्रमिंदुधवलं
लक्ष्मीनृसिंहं भजे ॥१॥ उपास्महेनृसिं

यनेत्रत्रयाय वौषट् ॥ ॐवीरायअस्त्रा
य फट् ॥ इतिदिग्वंधः ॥ ॐऐंद्रींदिशं
सुदर्शनेनबध्नामि नमश्चक्रायस्वाहा ॥
ॐ आग्नेयींदिशंसुदर्शनेनबध्नामिनमश्च
क्रायस्वाहा ॥ ॐ याम्यांदिशंसुद० ॥
ॐनैर्ऋतिंदिशं सुद० ॥ ॐवारुणींदिशं
सुदर्श०॥ ॐवायवींदिशंसुदर्श० ॥ ॐकौ
वेरींदिशंसुद० ॥ ॐईशानींदिशंसुद० ॥

नमः ॥ ॐमहारुद्राय मध्यमाभ्यां न
मः ॥ ॐसर्वतोमुखायअनामिकाभ्यांन
मः ॥ ॐविकटास्यायकनिष्ठिकाभ्यांन
मः ॥ ॐवीरायकरतलकरपृष्ठाभ्यां न
मः ॥ ॐश्रीलक्ष्मीनृसिंहाय हृदयाय
नमः ॥ ॐवज्रनखायशिरसेस्वाहा ॥
ॐमहारुद्राय शिखायै वषट् ॥ ॐसर्व
तोमुखायकवचायहुम् ॥ ॐविकटास्या

क्ष्रौंऐंह्रींइतिबीजानि । ॐश्रींअंआंइतिश क्तयः । विकीर्णनखदंष्ट्रायुधायेतिकील कम् । अकारादिति बोधकम् । श्रीलक्ष्मी नृसिंहप्रसादेन सर्वाभीष्टकामनासि ध्यर्थे श्रीलक्ष्मीनृसिंहसहस्रनामस्तोत्र मंत्रजपे विनियोगः ( अहंकरिष्ये ) ब्रह्मो वाच ॐश्रीलक्ष्मीनृसिंहाय नमः । अंगु ष्ठाभ्यांनमः ॥ ॐवज्रनखायतर्जनीभ्यां

मसहस्रेण तुष्टाव श्रुतिसंमतैः ॥१४॥
ॐनमः श्रीमद्दिव्यलक्ष्मीनृसिंहसहस्र
नामस्तोत्रमंत्रस्य ब्रह्माऋषिः। श्रील
क्ष्मीनृसिंहो देवता। अनुष्टुप्छंदः।
श्रीनृसिंहपरमात्माबीजम्। लक्ष्मीर्मा
याशक्तिः। जीवोबीजम्। बुद्धिःशक्तिः।
उदानवायुर्बीजम्। सरस्वतीशक्तिः। व्यं
जनानिबीजानि। स्वराः शक्तयः। ॐ

॥ १० ॥ देवदुंदुभयोनेदुर्विमलाश्चदिशो
भवन् ॥ नरसिंहमतीवोग्रंविकीर्णवदनं
भृशम् ॥११॥ लेलिहानंचगर्जंतंकालान
लसमप्रभम् ॥ अतिरौद्रंमहाकायंमहा
दंष्ट्रंमहारुतम् ॥ १२ ॥ महासिंहंमहा
रूपंदृष्ट्वासंक्षुभितंजगत् ॥ सर्वदेवगणैः
सार्धंतत्रागत्यापितामहः ॥ १३ ॥ आगं
तुकैर्भूतपूर्वैर्वर्तमानैरनुत्तमैः ॥ गुणैर्ना

भार्गवादिवहून्यस्त्राण्यभक्षयत कोपनः
॥ ७ ॥ संध्याकाले सभाद्वारेस्वांकेनि
क्षिप्यभैरवः ॥ ततःखड्गधरंदैत्यंजग्राह
नरकेशरी ॥ ८ ॥ हिरण्यकशिपोर्व
क्षोविदार्यातीव रोषितः ॥ उद्धृत्यचां
त्रमालानिनखैर्वज्रसमप्रभैः ॥ ९ ॥ मेने
कृतार्थमात्मानंसर्वतःपर्यवेक्षत ॥ हर्षि
तादेवताः सर्वाः पुष्पवृष्टिमवाकिरन् ॥

ली ॥ ३ ॥ द्वंद्वयुद्धमभूदुग्रंदिव्यवर्षसह
स्त्रकम् ॥ दैत्येंद्रसाहसंदृष्ट्वादेवाश्चेंद्रपु
रोगमाः ॥४॥ श्रेयःकस्यभवेदत्रइतिचिं
तापराभवन् ॥ तदाक्रुद्धोनृसिंहस्तुदैत्यें
द्रप्रहितान्यपि ॥ ५ ॥ विष्णुचक्रंमहा
चक्रंकालचक्रंतुवैष्णवम् ॥ रौद्रं पाशुप
तंब्राह्मंकौबेरंकुलिशासनम् ॥६॥ आग्ने
यंवारुणंसौम्यंमोहनं सौरपार्वतम् ॥

श्रीलक्ष्मीनृसिंहाय नमः ॥ श्रीभीमसेना
यनमः॥ ॐमार्कंडेय उवाच ॥ एवं युद्धम
भूद्घोररौद्रं दैत्यबलैःसह ॥ नृसिंहस्यांग
संभूतैर्नारसिंहैरनेकशः ॥ १ ॥ दैत्यको
ट्योहतास्तत्रकेचिद्भीताः पलायिताः ॥
तं दृष्ट्वातीवसंक्रुद्धो हिरण्यकशिपुः स्व
यम् ॥२ ॥ भूतपूर्वैरमृत्युर्मेइतिब्रह्मवरो
द्धतः ॥ ववर्षशरवर्षेण नारसिंहो भृशंब